# व्याळ शिक्षा

अथ व्याळशिक्षा प्रारंभः

अथ शिक्षां प्रवक्ष्यामि व्याळमौनिमतानुगाम्
पदसंधिसमायुक्तां स्वरसंधियुतां तथा १
या पदस्य षडावृत्तिः सा जटेत्यभिधीयते
क्रमोक्तपदजातं यदुत्तरं तद्द्विरभ्यसेत् २
ततः पूर्वं द्विरभ्यस्य द्वितीये तत्समापयेत्
द्वितीयमुत्तरेणैवमर्द्धर्चान्ते समापयेत् ३

इति जटा

त्रिभिः पदैः क्रमो यस्तु सकृदुक्त्वाय मद्ध्यमम्
अन्त्यमेव द्विरभ्यस्य मद्ध्यमन्तु सकृद्वदेत् ४
ततः पूर्वं द्विरभ्यस्य मध्यमन्तु सकृद्वदेत्
यथावसानमर्धर्चां क्रमवद्वेष्टनं भवेत् ५

इति त्रिक्रमजटा

जटावदभ्यसेन्मालामाद्युपान्त्यपदं स्मृतम्
क्रमश्चानुक्रमः प्रोक्तः पूर्वं व्याळमहर्षिणा ६

इति माला

क्रममुक्त्वा विपर्यस्य पुनश्च क्रममुत्तरम्
एकवारं शिखेतीसा जटे वान्तं समापयेत् ७

इति शिखा

जटावदभ्यसेद्रेखामर्धर्चात्पूर्वमुत्तरम्
युक्त्वा द्वाभ्यां जटैवोन्तं पूर्वं व्याळमहर्षिणा ८

इति रेखा

क्रमा द्वित्रिचतुर्थोक्तो वर्गो वा ऋचि वा क्रमात्
एवं दण्डश्चोच्यते सा वर्द्धर्चान्ते समापयेत् ९

इति दण्डः

क्रममुक्त्वा विपर्यस्य पुनश्च क्रममुत्तरम्

तदुत्क्रम्य पुनः ब्रूयात् ऋचान्तं क्रमवद्रथः १०

इति रथः

जटोत्तरं द्विरभ्यस्य चैकैकं मध्यमादिकम्
संधिवत्क्रमवच्चेति घन इत्युच्यते बुधैः ११

इति घनः

शिखेवानुक्रमन्तेषां त्रयाणां क्रममभ्यसेत्
जटे वान्तं वेष्टनीय्यं व्याळेन घन उच्यते ११

इति पाठान्तरम्

इति व्याळशिक्षा समाप्ता

Reference:
*Vyāla Śikṣā*, Manuscript in Adyar Library and Research Center, I A 19 = TR 19, Grantha on paper, 2 folios.